यस्मिन् योगे गजच्छाया भवति । तत्र श्राद्धं पुष्कलमाप्यते । यास्मिन्मघा-
त्रयोदसीरे मघारे चन्द्र थिर हस्तागतचे रवि थिर हस्तक गजच्छाया
योग वसि । एथि श्राद्ध कर्ने पुण्य घोर ।

+ + + + +

येतक्ते लेखि थिज्ञा वेरूपे याख्यात कनु ।

**Colophon.** इति श्रीलम्बोदरविरचिते संस्कृतदेशभाषाभ्यां ग्रहयज्ञविवरणे अगस्त्यो-
दयादिनिरूपणाख्यो द्वादशोऽध्यायः । समाप्तः ।

विषयः । इति श्रीलम्बोदरकृते संस्कृतदेशीयभाषाभ्यां ग्रहयज्ञविवरणे मध्याधिकारः समाप्तः प्रथमोऽध्यायः । इति श्री...... स्फुटाधिकारो नाम द्वितीयोऽध्यायः समाप्तः । इति श्री...... तिथ्यधिकारो नाम । ३ । (चतुर्थो नास्ति) इति श्री...... नक्षत्रच्छाया-धिकारो नाम । ५ । इति श्री...... वक्रनिरूपणं नाम । ६ । इति श्री ...... मङ्गलादि-ग्रहाणां चक्रकेन्द्रादिनिरूपणं नाम ।७। इति श्री...... चन्द्रचक्रार्द्धादिनिरूपणं नाम । ८ । इति श्री...... षष्टी संवत्सर निरूपणाख्या । ९ । इति श्री...... अयनांशचरदिनार्द्धादि-निरूपणाख्या । १० । इति श्री...... लग्नसाधनाख्या । ११ । इति श्री...... अगस्त्योद-यादिनिरूपणाख्या । १२ ।

---

**No. 81.** ग्रहादर्शपत्रम् । By निधिमिश्रदैवज्ञ । Substance, country-made paper, 9×4 inches. Folia, 7. Lines, 12 on a page. Extent 338 slokas. Character, Nāgara. Date, Saṃvat 1871. Place of deposit, District Chāprā, P. O. Gopālganj, Harapura, Jagadeo Paṇḍit. Appearance, tolerable. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।
गणेशं गिरं गोपिकावल्लभं च ।
गुरोः पादपद्मं प्रणम् भास्करादीन् ।
प्रणम्याथ कुर्वे ग्रहादर्शपत्रं ।
मतं भास्करीयं निधिः संनिरीक्ष्य ।
षड्ग्निसोमो न शको गताब्दको-
ऽपोजितैर्वेदकरैर्विभाजितः । इत्यादि

**End.** गतमध्यदिनैः × × × × ।
शुक्लाडोभवेद्बुधः ।

अवधपुरनिवासी श्रीजिनचिर्विविधकर्मे: ।
सकलपरमतिज्ञः सर्वविद्यानारीत्वा ।
विबुधजनहितार्थं श्रीमचाद्र्मपथं
विधुगगनवसुचन्द्रे वैक्रमेऽब्दे चकार्षीत् ।

**Colophon.** इति श्रीजिनचिमिश्रदैवज्ञविरचिते प्रचाद्र्मपुष्पे प्रथमाद्याधिकारः समाप्तः । संवत १८७१ ।

विषयः । प्रश्नानां मध्यमाद्यधिकारकथनम् । दिनगणना-नित्यपर्वानयनादि कथनम् ।

---

**No. 82.** चतुरनुयोगव्याख्या । Substance, country-made paper, 11 × 4 inches. Folia, 6. Lines, 20 on a page. Extent, 150 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Diṅmaṇḍalā cārya Mahārāja Bālacandra Sūri. Appearance, old. Prose. Correct.

**Beginning.** इह प्रवचने चत्वारोऽनुयोगाः, तद्यथा चरणकरणानुयोगः, धर्मकथानुयोगः, गणितानुयोगः, द्रव्यानुयोगश्च ।

**End.** अस्माभिः प्रति या ( ... ) प्राग्व्याख्यातोऽनुयोग एकैकः सकलायां गाथायां, चतुरनुयोगास्तु पृथगधुना, इति ।

**Colophon.** इति चतुरनुयोगव्याख्या सम्पूर्णा ।

विषयः । जैनचतुरनुयोगव्याख्या ।

---

**No. 83.** चन्द्रोन्मीलनदीपकं । Substance, country-made paper, 15 × 3 inches. Folia, 12. Lines, 8 on a page. Extent, 240 slokas. Character, Bengali. Date S.K. 1718. Place of deposit, Zilla Medinipur, post Garveta, gram Khunverā, Babu Vaikuṇṭha Nāth Chakravarti. Appearance, old. Prose and verse. Correct.

**Beginning.** ॐ नमः शिवाय ।

हितनयः क्षितिरात्रिनाहनिशाचिन्त्या चन्द्रवाचिन्त्याः ।
सकलचराचरस्थिरस्थि परात्परं नमामि । (?)
दैत्यराज इदं वक्ष्यं जनचित्तादुदीपकं ।

अपि ज्योतिर्विदः कश्चे बुद्धिनिर्मोहकारकं ।
लाभालाभं सुखं दुःखं जीवितं मरणं तथा ।
जय पराजयः सन्धिर्गमागमविनिश्चयः ।
मुक्तचिन्ता च तथा मुष्टि राजावस्थादि कौतुकं । (?)
एतत् सर्वं मयाख्याते चन्द्रोन्मीलनदीपके ।
ज्ञानदीपकमादाय वर्णिं कृत्वा स्वदचरैः ।
स्वरह्रोचैव संयोज्य ज्ञापयेदुत्तराचरैः ।
अकचटतपयशा वर्गा अष्टास्वेषु वर्गेषु चि वहं शुभाशुभं सर्वं ।
एतैव जगत् सर्वं व्याप्तमचरजकाभिः । इत्यादि ।

End. प्रश्नस्य वर्गदर्शनादेव यो लभ्यते स एव प्रश्नाचरं निरूप्यते यद्वर्गस्य प्रथमाचरं तद्वर्गस्य प्रथमाचरं भवति वर्गस्य प्रधानं चालिङ्गिते चधिके

चालिङ्गितं ... ... ... चतुर्थं चभिधूमिते ।
दग्धेन पञ्चमो वर्गो विलोमो धूमिताचरैः ।

अवर्गा यदाभिधूमिता भवन्ति तदा वैपरीत्याय चतुर्थो वर्गो म्टचीतव्यः ।
इति स्वरार्थचतुर्थप्राप्तिः ।

Colophon. इति सारोद्धारे चन्द्रोन्मीलनग्रन्थे ज्ञानपटलः समाप्तः । शकाब्दाः । १७१८ । ५ । ११ ।

विषयः । लाभालाभादिनिरूपकवर्गनिरूपणं । वर्गाणां न्यासविधिः । स्वराणामुत्तराचररूपेण निरूपणं । योनिनिरूपणं । द्रव्यसमयादीनां निरूपणं । मूलाचरनिरूपणं । जीवित-मरण-सुख दुःख-जय-पराजयादिनिरूपणं । कालनिरूपणं । चक्रपटलनिरूपणं । स्वप्नभेदे वर्णानामवस्थानात् फलभेदकथनमिति निष्कर्षः ।

---

No. 84. चयनप्रदीपः । By नरसिंह वाजपेयी । Substance, palm-leaf, 15×1 inches. Folia, 51. Lines, 3 on a page. Extent, 1,000 slokas. Character, Uria. Date ?. Place of deposit, Dāmodarpur Śāsana, zilla Puri, Late Paṇḍit Gopīnāth Misra. Appearance, old. Verse. Generally correct.

Beginning. श्रीगणेशाय नमः । अविघ्नमस्तु ।
एकाचाचीनसन्नादिरपि सम्यगनुष्ठितः ।
यन्निमन्त्रोरप्राप्तिवर्षो नु चरवे नमः । (?)

श्रीनृसिंहं नमस्कृत्य कात्यायनमुनीन् गुरून् ।
चयनस्य प्रदीपोयं ऋर्सिंहेन प्रणीयते ॥
अग्निः सोमक्रतोरङ्गमनारभ्य श्रुतोऽप्यसौ ।
लिङ्गाद्वाक्याद्विनिकत नियतो हि भवावते ॥
न स्यादग्निष्टोमसंस्थो विद्यान्युग्निनिधानतः ।
अग्निष्टोमतरं वाक्यं विकृतावेव सङ्गतं ॥ इत्यादि

End. एवं साङ्गेभिनिर्हत्ते चयने इतः परं त्यजेत् ।
यावज्जीवं पक्षिमांसं × ×. वर्षति धावनं.॥ (?)
गोपेयाद्वनितां शूद्रामयं धर्मो युगान्तरं ।
द्वितीयचयने भार्य्यां चवां वैश्यास्य वर्जयेत् ॥
तृतीयचयने विप्रो ब्राह्मणीमपि वर्जयेत् ।
चयनस्तु नियमः पुंसः सभ्भवेन सत्यावपि ॥
... ... ... ... ... ...
इत्यग्निचिद् वाजपेयी नरसिंहविनिर्म्मितः ।
चयनस्य प्रदीपोऽस्तु प्रीतये सुरवैरिणः ॥

Colophon. इति श्रीमहामहोपाध्यायाग्निचिद्वाजपेयिनरसिंहमिश्रविरचितचयनप्रदीपः समाप्तः मधुकरमिश्रेण लिखितोऽयं चयनप्रदीपः ।

विषयः । यज्ञविधिविधानं ।

---

**No. 85.** जगन्मोहनं । By जयमङ्गलाचार्य्यः । Substance, country-made paper, 13 × 5 inches. Folia, 243. Lines, 11 on a page. Extent, 3,600 ślokas. Character, Nāgara. Date ? Place of deposit, District Chāprā, P. O. Gopālganj, Harapura, Jagadeo Paṇḍit. Appearance, tolerable. Verse. Correct.

Beginning. प्रह्वाम्भोजसुरासुरेन्द्रनिवहस्फुर्जत्किरीटोज्ज्वल-
ज्योतिर्नीराजितपदारविन्दयुगलश्चलत्करो रविः ।
ब्रह्माण्डोदरसंस्थिताखिलजगद्ध्वान्तस्य संध्वंसनं
यः कुर्व्वन् सततं जगत्यमुदिनं पर्य्येति कालात्मकः ॥

ज्योतिः शास्त्रं समस्तं प्रथमपुरवतः सर्वगर्भादिविदिता ।
पूर्व्वं शाते पर्य्यालोचमुनिवरमया: शास्त्रमाद्यं चकार ॥ १ ॥
तच्चेदं विश्वरूपं बहुपदनिकरैर्गुह्ममध्यात्मरूपं ।
ग्रथत् सर्व्वप्रकाशं प्रथचरितविदां निर्मलं ज्ञानचक्षुः ॥
कल्पद्रुमं ह्यविधिविधमर्थगम्भीरमाद्यावधुना यदुक्तं ।
तत्सारांशः सन्ध्यमिदं कलीयं वक्ष्ये जगन्मोहनन्नामधेयं ।
+ + + + । इत्यादि ॥

End. चारमं सूर्य्यमूले यदा पृच्छति पृच्छकः ।
सर्व्वस्य भवेत्तस्य नाशकार्य्यां विचारणा । १
देवस्थे नदीतीरे स्थाने चैव मनोरमे ।
उपविश्य यदा पृच्छेत् तदा सिद्धिमवाप्नुयात् ॥
+ + + +
सुखोपविष्टे दिक्संस्थे पृच्छके सिद्धिरोचिता ।
विदिक्स्थे च दुरासीने कार्य्यसिद्धिर्न जायते ॥

Colophon. इति श्रीसारसंग्रहावचनावते भट्टश्रीलक्ष्मणाचार्य्यविरचिते जगन्मोहने चतुरश्रमविद्या नाम द्विनवतितमोऽध्यायः समाप्तः ॥ शुभं भूयात् ।

विषयः । १ अध्याये शास्त्रावतारकथनं । २ दैवज्ञलक्षणकथनं ॥ ३ हृद्याध्यायः । ४ वत्सरशरोराधिपतिनिर्णयः ॥ ५ सम्वत्सरफलादिकथनं । ६ रूपसन्निग्रहसरसमीरसाधिप-फलकथनं । ७ रवेराशिप्रवेशफलकथनं । ८ गुरुद्याब्दफलकथनं । ९ रविचारादिकथनं । १० चन्द्रचारकथनं । ११ भौमचारकथनं । १२ बुधचारकथनं । १३ गुरुचारकथनं । १४ शुक्रचारकथनं । १५ शनिचारकथनं । १६ राहुचारकथनं । १७ केतुचारकथनं । १८ ग्रहणफलकथनं । १९ परिवेशकथनं । २० कालनिर्णयः । २१ संक्रान्तिफलकथनं । २२ चरिष्ट-सूचकाध्यायः । २३ अग्न्यशोचहृतिप्रगुभिनादिनिर्णयः । २४ कालज्ञानं । २५ सुखप्रादि-निरूपणं । २६ दुःखप्रादिनिरूपणं । २७ तिथिफलादिकथनं । २८ वारादिकथनं । २९ नक्षत्रफलकथनं । ३० योगादिकथनं । ३१ करणादिनिरूपणं । ३२ ताराबलादिकथनं । ३३ लग्नगुणादिफलकथनं । ३४ लग्नसंज्ञाकथनं । ३५ मुहूर्त्तकथनं । ३६ चययोगकथनं ? । ३७ नक्षत्रशादिकथनं । ३८ चययोगप्रचयोत्पातकथनं । ३९ चयतयोगसिद्धयोगादिकथनं । ४० लग्नचक्रसंस्थापनं । ४१ गुरुदोषापवादकथनं । ४२ चक्रकवर्गलक्षणं । ४३, ४४ प्रत्येकाष्टकवर्ग-लादिफलकथनं । ४५ प्रस्ताराष्टकफलकथनं । ४६ गण्डादिकथनं । ४७ प्रतिपदादितिथिनिर्णयः ।

४८ रजस्वलाद्यशुद्ध्यादिकथनं । ४९ आधानकथनं । ५० पुंसवनादिकथनं । ५१ सीमन्तोन्नयनादिकथनं । ५२ सुतकर्म्मकथनं । ५३ प्रसवयोनिभेदकथनं । ५४ प्रसवकालादिकथनं । ५५ प्रश्नाधिकारः । ५६ ग्रहशीलारिष्टादिकथनं । ५७ उपश्रुतिकाध्यायः । ५८ मर्त्य-यम-वराहप्रभृति प्रणीतद्वितीयप्रकारारिष्टकथनं । ५९, ६० राजयोगादिकथनं । ६१ राजयोगभङ्गादिकथनं । ६२ ग्रामसुखकथनं । ६३ प्रभावफलकथनं । ६४ नवजातकाङ्गभूतसत्वादृश्यानादृश्यनिरूपणं । ६५ पञ्चविधदशाभेदकथनं । ६६ जीवातककथनं । ६७ जीवर्षकथनं । ६८ सामुद्रिकलक्षणकथनं । ६९ नामकरणकथनं । ७० कर्णवेधकथनं । ७१ अन्नप्राशनकथनं । ७२ चौरकर्म्मकथनं । ७३ चौरस्त्रीकाराङ्कुरार्पणकथनं । ७४ उपनयनविद्यादिकथनं । ७५ विवाहप्रकुलप्रश्नकथनं । ७६ कालशुद्धिकथनं । ७७ मघादोषकथनं । ७८ कृत्याकृत्यविवेकः । ७९ विवाहाङ्गभूताष्टदृष्टकूटादिकथनं । ८० मुहूर्त्तनिरूपणं । ८१ विवाहलग्नशुद्ध्यादिकथनं । ८२ गृहप्रवेशकथनं । ८३ वास्तुनिरूपणं । ८४ विजययात्राप्रश्नकथनं । ८५ केतुचिह्नोपाश्रितयोगकथनं । ८६ समरयात्रादिकथनं । ८७ सकलदेवप्रतिष्ठापनकथनं । ८८ राज्याभिषेककथनं । ८९ राज्ञां सन्त्राभिषेककथनं । ९० यज्ञाध्यायः । ९१ सर्व्वकर्म्मसम्पत्त्यादिनिरूपणं । ९२ अध्याये ग्रह-गोधिकाप्रान्त्यनुष्ठानविद्यादिकथनं ॥

---

**No. 86.** जयतीर्थविजयटीका । Substance, country-made paper, 12×4 inches. Folia, 40. Lines, 12 on a page. Extent, 960 ślokas. Character, Nāgara. Date ? Place of deposit, Benares City, Pandit Vāmanācārya, Bibihāṭi. Appearance, old. Prose. Correct. Incomplete.

**Beginning.** श्रीवेदव्यासाय नमः ।

श्रीरामं श्रीरमाधीशं दोषदूरं गुणाकरं ।
वन्दे श्रीश्रीमदानन्दतीर्थपूर्व्वान् गुरूनपि ॥

**End.** उपभक्तेः सन्नतभक्तेः वयस्य आदीनस्य मम विभूषणं अलङ्कारः भवतु भूयात् भगवान + + इत्यस्मात् कर्मलोके ध्यायनीयमिति भावः ।
( इतोनास्ति ) ।

**Colophon.** — — — — — — —

विषयः । माध्वजयतीर्थदिग्विजयव्याख्या ।

---

**No. 87.** जातककल्लोलः । By रघुनन्दन । Substance, country-made paper, 14×5 inches. Folia, 71. Lines, 12 on a page. Extent, 1,800 slokas. Character, Nāgara. Date Sam 1913. Saka 1779? Place of deposit, District Chāprā, P.O. Gopālganj, Harapura, Jagadeo Paṇḍit. Appearance, tolerable. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

नत्वा जातककल्लोलं ज्ञानार्थाय विपश्चितां ।
शारदेभास्करेशांश्च तनोति रघुनन्दनः ॥
यस्माज्जातकग्रन्थानि संविलोक्य करोति वै ।
वराहमिहिरादीनां सत्यादीनाञ्च सम्मतं ॥
+ + + + भेद्येक राशयः सुरजादयः ।
नवभिर्नवभिः पादैः पूर्व्वतः क्रमतो धिया ॥ इत्यादि ।

**End.** अथ दिनदशा ।

वेदघ्नं जन्मनक्षत्रं तिथिवारसमन्वितं ।
ग्रहेणैव चरेद्भागं शेषं दिनदशा भवेत् ॥
शोषं क्रान्तिं सुखं क्लेशं + + प्राप्तिं भयं पुनः ।
ज्ञानं कलिं महाभूतिं नृणां कुर्व्वन्ति खेचराः ॥
श्रीमज्जातककल्लोलमकरोद्रघुनन्दनः ।
श्रीमतृलक्ष्मणपुत्रस्तु सर्व्वजातकसम्मतं ।
मोदायविबुधानां च शिष्याणां चेतसे मुदा ।
अकारि जातकग्रन्थः श्रीमता सर्व्ववल्लभः ॥

**Colophon.** इति श्रीरघुनाथपण्डितविरचिते जातककल्लोले चक्रोत्तरीदशाविंशोत्तरीदशाफलाध्यायो द्वादशपरिच्छेदः ॥ शिखी शशि ग्रह चन्द्र मिते समे गजमुनिखरचन्द्रमिते शके ... लिखितं ॥

विषयः । १ परिच्छेदे राशिप्रभेदादिकथनं ॥ २ पः रिष्टादिकथनं ॥ ३ पः रव्यादिभावफलकथनं । ४ पः षड्वर्गफलादिकथनं ॥ ५ पः एकादिषड्वर्गयोगफलकथनं । ६ पः राशिग्रहसंयोगे योगफलादिकथनं ॥ ७ पः ८ पः अयनांशगुणपक्षादिफलकथनं । ९ पः स्त्रीभावफलकथनं । १० पः अष्टकवर्गादिचक्रकथनं । ११ पः परमायुर्लग्निकदशायोगिनीदशादिकथनं ॥ १२ परिच्छेदे चक्रोत्तरीविंशोत्तरीदशाफलादिकथनं ॥

**No. 88.** जातकर्मपद्धतिः। By दिवाकर। Substance, country-made paper, 10×4 inches. Folia, 8. Lines, 18 on a page. Extent, 160 ślokas. Character, Nágara. Date ? Place of deposit, Benares City, Late Babu Hariścandra. Appearance, old. Verse. Incorrect.

**Beginning.** श्रीमच्छिवाख्यं + + + नितम-
चक्रचूडामणिं सकलहृन्दवन्द्यं
विद्युर्विषं शिवसेवनतुल्यं।
नत्वोमि नित्यं शिवचारिवेतो:।
श्रीकेशवश्रीपतिसुन्दरादि-
प्रणीतनन्दादिचिमत्यसारं।
प्रकाश्यते सुत्रदिवाकरेण
पद्यात्मभिर्जातकमार्गपद्यं॥

**End.** नन्देन्दुवर्षेण मया कृतोयं
पद्मारवेः पादयुगप्रभावात्।
शाकेनगाम्भोधिशरेन्दुतुल्ये १५४०
प्राच्यप्रबन्धान् परिभाव्य सम्यक्॥

**Colophon.** इति श्रीसकलचक्रचूडामणिश्रीकृष्णदैवज्ञसुतश्रीमद्दृसिंहगणकस्य सुतेन दिवाकरेण विरचितायां जातकर्मपद्धतौ पद्म + + + पञ्चहारः।

विषयः। जातकर्मविचारः।

---

**No. 89.** जातकार्णवसङ्ग्रहः। By वराहमिहिर। Substance, country-made paper, 15×3 inches. Folia, 6. Lines, 7 on a page. Extent, 84 ślokas. Character, Bengali. Date ? Place of deposit, zilla Medinipur, post Garvetá, gram Khunverá, Babu Vaikunthanáth Chakravarti. Appearance, tolerable. Generally prose. Generally correct.

**Beginning.** श्रीश्रीरामः।
नवग्रहेन्द्रामाद्याः शकाब्दाः कालवक्षराः।
कक्षाद्याश्चमयः प्रभाकरचतुर्थेषादिमासैर्युतः
भिन्नः चाश्रिहृताग्रयुक् सुरवृक्षैश्चादिलासैर्युतः।

अश्विन्यः सतिथिर्द्विधाविकलमिश्रोनमैत्रोद्धृतो
भौमो × × × × भितनिभार्के शावमोऽव्ययः । इत्यादि

**End.** प्रतीच्याञ्च तथा ज्ञेया सूने देशान्तरे सति ।
एवं क्रमेण संक्रान्ते मेषवारादिको भवेत् ।
मेषवारादिको ज्ञेया × × × × × × ।

**Colophon.** इति श्रीवराहमिहिराचार्य्यविरचितजातकार्णवसंग ...

विषयः । गुणकच्छेदकनिर्णयः । मध्यभुक्तिनिरूपणं । छायाधिकारनिर्णयः । चन्द्रग्रहण-निरूपणं । सूर्य्यग्रहणनिरूपणं । संक्रान्तिनिर्णयः ।

---

**No. 90.** जातकालङ्कारटीका (बालबोधिनी) । By नर्म्मदागिरि ।
Substance, country-made paper, 12 × 5 inches. Folia, 112. Lines ?
Extent, 1,344 slokas. Character, Nāgara. Date, Saṃvat 1890. Place of deposit, Benares City, Late Babu Hariscandra. Appearance, new. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।

सानन्दमिति यत्पूर्व्वमिति, गणेशः अवं शिविसदनं लम्बोदरं भारतीं सूर्य्यादिग्रहमण्डलं, हृदकं चिन्तं निजगुरुं तान् भक्त्या सानन्दं यथा स्यात् तथा प्रणिपत्य नत् + + + जातकं श्रीमच्छिवागुप्तया गणधराहं कुर्व्वे अस्मि ।

**End.** नर्म्मः पद्यैरिति श्रीगणेशेन अस्मिन् जातके संज्ञाध्यायः सम्पूर्णतः अन्यत् सर्व्वं पूर्व्वं व्याख्यातं ।

**Colophon.** इति श्रीनर्म्मदागिरिणावधूतेन विरचितायां बालबोधिन्यां जातका-लङ्कारटीकायां संज्ञाध्यायः ।

विषयः । जातकालङ्कारव्याख्या ।

---

**No. 91.** श्रीजिनशतकम् । Substance, country-made paper, 10 x 5 inches. Folia, 6. Lines, 16 on a page. Extent, 300 slokas. Character, Nāgara. Date, Saṃvat 1771. Place of deposit, Benares City, Diṅmaṇḍalācārya Mahārāja Bālacandra Suri. Appearance, new. Verse. Incorrect.

**Beginning.** ॐ नमः ।

श्रीमद्भिः सैमे ++ भि भूवनमपि ++ बम् नापरत्येव प्रावन्
सतृत्पयप्राहयेणु प्रभुद् किमिति पन् म ++ नेवोपयन्नाः,
सूर्यो वीर्यादयार्थ्यां इभि भवितु मिवा ++ प्रबोधक दीप्राः ।
प्रोन्नुर्यं ++ यग्मप्रभवक (...) भुवः छष्मिये ++ नाश्विनोवः ।

**End.** यां रक्षां वा विवेकी बडविधविपदां भेदिकां दैन्यद्मन्याम्
युष्मान् मान्यापमध्मान् नव न ++ प्रथा वामयो वाम् विभेयात् ।

**Colophon.** इति श्रीजिनशतके वर्णसा वामवर्णसो नामचतुर्थः परिच्छेदः सम्पूर्णः
संवत् १७७१ चैत्र पूर्णिमायां ।

विषयः । जिनस्तुतिः ।

---

**No. 92.** जिनसहस्रनाम । Substance, country-made paper, 10 x 5 inches. Folia, 4. Lines, 13 on a page. Extent, 120 slokas, Character, Nāgara. Date ? Place of deposit, Benares City, Diṅmaṇḍalācārya Mahārāja Bālacandra Suri. Appearance, very old. Verse. Incorrect.

**Beginning.** श्रीसर्वज्ञाय नमः ।

सर्वेषामपि कर्णाभ्यां गुन्नम् वाचा समुच्चयम्
जीवः पौवरपुष्पौर्धभते पश्चमुत्तमम् ।

**End.** वन्धानां सतदं ++ चौषा ++ जीवितप्रदं
++ पश्चविध्वंसी भंवयान् पयनान् जयान्
इति श्रीचर्हत् सहस्रनामसमुच्चये द्वशमः प्रकाशः ।

**Colophon.** इति श्रीचर्हत्सहस्रनाम सम्पूर्णम् ।

विषयः । जिनसहस्रनामकथनम् ।

---

**No. 93. जिनस्तुतिमाला।** Substance, country-made paper, 10 × 5 inches. Folia, 7. Lines, 15 on a page. Extent, 280 ślokas. Character, Nāgara. Date, Saṃvat 1834. Place of deposit, Benares City, Diaṁmaṇḍalācārya Mahārāja Bālacandra Suri. Appearance, old. Verse. Correct.

**Beginning.** श्रुत प्रथमप्रभं नाभि ।

नमत्‌ (...) त्वभिनन्दनवन्दिता सुरवधूः परमोदरः ।

अरैकरीन्द्रविहारचकोररिम्‌ सुरवधूनयनः परमोदरः ।

**End.** चयचयिचयिरे ++ कठोतृहर कचोक्षुठे

संक्षिवे भयक्षोभव +++

विकेपरमवक्षरां गजाराव घन (...) भायाति भायाजिते

बासमाचारतारावक्षजेमदा ।

**Colophon.** इति श्रीमच्छावीरस्तुतिः ।

विषयः । जिनस्तुतिः ।

---

**No. 94. ज्ञानाद्भुतमञ्जरी।** Substance, country-made paper, 8 × 3 inches. Folia, 9. Lines, 9 on a page. Extent, 200 slokas. Character, Bengali. Date ? Place of deposit, Chakradhá *via* Naráyanganja, Pandit Pūrṇa Candra Bhaṭṭācāryya. Appearance, old. Verse and prose. Generally correct.

**Beginning.** ॐनमः सर्व्वाय ।

त्रिलोचनं नमस्कृत्य जगदीशं दिगम्बरं ।

गौचारादौ मया प्रोक्ता ज्ञानाद्भुतमञ्जरी ॥

अथ गौचारादिभिः काक्षावेदने युगपदुच्चभिः प्रश्ने कृते विषयपार्थक्य-ज्ञानाय चूड़ामणेः प्रश्नाक्षरे नाना प्रश्नान्‌ पर्य्यालोच्य चार्य्याचतुष्टयमाह। चकचटतपयशा कविकुजसित सौम्यजीवसौरीणां चन्द्रस्य च निर्द्दिष्टा मायाद्यौ × × । इत्यादि ।

**End.** अथ मध्ये × × चिक्कयोः प्रकारान्तरं । यथा पुनः ।

(अतः परं खण्डितं)

विषयः। प्रश्नाक्षरानुसारेण लग्ननिरूपणं। तेनैव जन्मलग्नप्रमाणनिरूपणं। लग्ननिरूपणा-द्राशिनिरूपणं। प्रश्नाक्षरेण जीवधातुमूलनिरूपणं। देवनिरूपणं। मनुजनिरूपणं। पक्षि-निरूपणं। पदनिरूपणं। स्थितिनाशादिनिरूपणं।

---

**No. 95.** ज्येष्ठमाहात्म्यम् (जैमिनीयं)। Substance, country-made paper, 15×5 inches. Folia, 42. Lines, 14 on a page. Extent, 420 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Late Babu Hariscandra. Appearance, new. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः।

नत्वा साम्बरमानाथं द्युमणिं सात्मजाम्बिकां।
ज्येष्ठमासस्य माहात्म्यं वक्ष्ये प्रीत्यै विदां भुवि॥
सुवर्णेतरमैलेन्द्रे सुखासीनं जटाधरं।
उपगम्यैकदा माता जगतां हिमशैलजा॥

**End.** भविष्यन्ति नरा गौरि
दिव्यदेहाजनेश्वराः।
यद्भीष्टं च तेषां ++ सर्वं स्यात् तपसा ...

**Colophon.** इति जैमिनीये ज्येष्ठमाहात्म्ये श्रीयुधिष्ठिरसंवादे द्वादशोऽध्यायः।

विषयः। ज्येष्ठमासमाहात्म्यवर्णनम्।

---

**No. 96.** ज्योतिर्मरीचिः। Substance, country-made paper, 11×3 inches. Folia, 30. Lines, 5 on a page. Extent, 480 slokas. Character, Bengali. Date ? Place of deposit, zilla Mayamansing, parganá Aṭiyá, post Jāmurki, grām Hálālia, Paṇḍit Śasibhúṣaṇ Bhaṭṭācāryya. Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय।

निमज्य ज्योतिरब्धौ च भास्कराद्यं सम्मतम्।
ज्योतिर्मरीचिरयं प्रोक्तो बालानामल्पबुद्धये॥
अथ वाराः। रविसोममङ्गलाश्च बुधो जीवः सितः शनिः।
एतानि वारनामानि पूर्वमुक्तानि सूरिभिः॥ इत्यादि।

End. अथ पक्षपरिमाणवचनं ।

माघाब्दे पञ्चशाब्दे पर्य्यांकाद्ये देये लाभौः ।

कान्तं वन्नं हन्तं पूर्णं चन्द्रं मला राशौ चेत्

कुतृखामः प्राठश्चतो राहुःक्रूरः पाद्यात्

तथाद्धाब्देषम्र्यांब्दे मध्येकाब्दे कर्त्तव्या ॥

(अतः परं खण्डितं)

विषयः । वारनिरूपणं । नक्षत्रनिरूपणं । तेषामधिपतिनिरूपणं । केन्द्रादिसंज्ञाकथनं । राश्याधिपकथनं । राशिनक्षत्रविभागकथनं । वारवेलाकथनं । गृहप्रवेशकालादिनिरूपणं । भूमिकम्पकारणनिरूपणं । संक्रान्त्यादिनिरूपणं । गुरुचक्रनिरूपणं । शुक्रादीनामष्टवर्ग-निरूपणं । पक्षपरिमाणवचनकथनं ।

---

No. 97. ज्योतिषरत्नं । By कमलाक्ष शर्म्मा । Substance, country-made paper, 14 x $3\frac{1}{2}$ inches. Folia, 21. Lines, 4 on a page. Extent, 210 slokas. Character, Bengali. Date ? Place of deposit, Elángā *via* Tángail, Babu Nilkamal Bhaṭṭācāryya, zamindar. Appearance, old. Verse. Generally correct.

Beginning. ॐ नमः सौरव्याय ।

प्रणम्य कालिकापादं कमला(क्ष)श्च शर्म्मणा ।

क्रियते ज्योतिषां रत्नं विदुषां तुष्टिहेतवे ।

प्रतिपत्षष्ठी एकादशी नन्दा

द्वितीया सप्तमी द्वादशी भद्रा ।

तृतीया अष्टमी त्रयोदशी जया ।

चतुर्थी नवमी चतुर्दशी रिक्ता ।

पञ्चमी दशमी पूर्णिमा पूर्णा ।

नन्दाभद्राजया रिक्ता पूर्णा च तिथयः क्रमात् । इत्यादि ।

End. चन्द्रतो यदि वारिलग्नतो द्वादशद्वितीयराशिगामिनः ।

शुक्रवाक्पति-शशाङ्कनन्दना क्षामनकथाणि प्रश्नः ।

इत्यादि (अतः परं खण्डितं)

विषयः । तिथियोगकथनं । राशिकथनं । दशाविभागकथनं । यात्राकालनिरूपणं । विवाहकालनिरूपणं । अथ गोधूलिप्रशंसाकथनं । यज्ञोपवीतादीनां कालनिरूपणं । गर्भादि-दोषकथनपूर्वकं तेषां शान्तिकथनमित्याद्यावश्यकीयज्योतिर्निबन्धानां संग्रहः ।

---

**No. 98.** ज्योतिष्टोमविहारकारिका । Substance, country-made paper, 11 × 5 inches. Folia, 12. Lines, 2 on a page. Extent, 50 slokas. Character, Nāgara. Date ? Place of deposit. Benares, Vāmanacārya. Appearance, new. Verse. Correct.

**Beginning.** प्राग्वंशः षोडशायामो द्वादशव्याम इष्यते ।
प्राग्वंशात् पश्चिमे भागे पत्नीशालाचतुष्पदा ॥
वेदेर्निर्माणं सौमिक्याः क्रमैर्द्विद्वादशाङ्गुलैः ।
चाद्विविस्तृतं दिवि चन्द्रद्वियुगभूमिषु ॥

**End.** पश्चात् ततश्चतुरंशं तु दक्षिणोत्तरतः क्षिपेत् ।
+ + + मध्यतुल्याश्चयथा तस्य संभवः ॥
इति पदमानं । इत्येकपदमानेन सौमिकी वेदिरीरिता ।

**Colophon.** इति पदमानं समाप्तं ॥

विषयः । आपस्तम्बसूत्रोक्ताग्निष्टोमविहारनिर्माणविधानं ।

---

**No. 99.** ज्योतिष्टोमविहारकारिकाव्याख्या । Substance, country-made paper, 11 × 5 inches. Folia, 12. Lines, 7 on a page. Extent, 200 slokas. Character, Nāgara. Date ? Place of deposit, Benares, Vāmanācārya. Appearance, new. Prose. Correct.

**Beginning.** अथ कर्मकाण्डकलापे ख्यातीव निष्णाततरः कश्चिद्विपश्चित् पुरुषः सर्व्वेषां सप्ततन्तूनां प्रकृतिभूतज्योतिष्टोमसम्बन्धिविहारस्य प्रतिपादकानां अध्वर-कारिकाणां गूढार्थत्वात् सुखतोपलब्धये व्याख्यानमारभते ॥

**End.** "इत्येकं पदमानेन सौमिकी वेदिरीरिता" इति । ईरिता इतीतिकथनं विमतादिश्लोकार्थ्येनेति ज्ञातव्यं ॥

**Colophon.** इति श्रीदेवयाज्ञिकवामेव शारदाभक्तियुजा विरचितं पदमानेन सोम-विहारप्रतिपादकानां अध्वरकारिकाणां विवरणं समाप्तं ॥

विषयः । ज्योतिष्टोमविचारप्रतिपादककारिकाव्याख्या ।

---

No. 100. ज्योतिःसारः । By रमाकान्त । Substance, country-made paper, 20 x 5 inches. Folia, 6. Lines, 7 on a page. Extent, 180 slokas. Character, Bengali. Date ? Place of deposit, Sákrāil *via* Tangail, Paṇḍit Hariścandra Tarkaratna. Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

नत्वा श्रीनाथमालोक्य ज्योतिर्ग्रन्थान् समासतः ।
ज्योतिःसारं रमाकान्तो वक्ति बालावबुद्धये ॥
तत्रादौ जातकगणनं ।
मेषादयोऽपि मीनान्ता राशयो द्वादश स्मृताः ॥
यस्य मासस्य यो राशिस्तत्र सूर्य्योदयः ।
तत् सप्तमे चास्य प्रथमतन्नारम्भे उदयः ॥ इत्यादि ॥

**End.** जरायौ जीवफलं ।
चाद्याष्टमे बन्धुवियोगदुःखं ।
अन्ते चतुर्थे धनधान्यनाशः ॥
षष्ठे च रोगः कलहश्च तीये ।
सबूतमाप्नो द्वादशजीवे ॥ (अतःपरं खण्डितं)

विषयः । जातकगणनं । यामार्द्धादिनिरूपणं । पताकीनिरूपणं । व्यवहारनिर्णयः । यात्रानिर्णयः । मेकुकाचपतनिरूपणं । चौरादयकथनं । स्वप्ननिरूपणं । जरायौ जीवफलनिरूपणं ।

---

No. 101. टीकासर्व्वस्वं ( अमरकोषव्याख्यानम् ) । By सर्व्वानन्द । Substance, palm leaf, 14 x 1 inches. Folia, 60. Lines, 5 on a page. Extent, 2,100 slokas. Character, Uriá. Date ? Place of deposit, Puri, Śaṅkara Maṭha. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।

बर्हिर्बो बर्हापीड़ः स्फुरितवरो बालपल्लवोहेम ।
मेदुरसुहिरश्यामलरुचिरो बाद्रेव गोविन्दः ।

सुदेऽसौ धीराणां न गुणकरमर्थ्यामनपरि-
श्रमः किच सार्थंकदिव विबुधाः सन्तुमुचितं ।
इति ये साक्षयाश्रजुमतयो मूलनतया
बलासेनी षेया गुणणु पुनरण्यत्रस्थिरयं ।
सपटीकासर्व्वस्वं इमटीकाधितृ कृतीत्यमरकोषे
श्रीमत् सर्व्वानन्दो बन्द्यघटीयार्तिहरपुषः । इत्यादि ।

**End.** निकुञ्जकुञ्जावित्यनेन सर्वोपसर्गनिहन्ति
उदयमिवोदयमुपमानादिति ।

**Colophon.** इति बन्द्यघटीय श्रीसर्व्वानन्दकृतौ टीकासर्व्वस्वे ग्रैवर्गः ।
(अतः परं खण्डितं)

विषयः । अमरकोषस्य व्याख्यानं ।

---

**No. 102.** ठाणाङ्गसूत्रम् । Substance, country-made paper, 12×4 inches. Folia, 78. Lines, 30 on a page. Extent, 3,900 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Diṅmaṇḍalācārya Mahārāja Bālacandra Sūri. Appearance, old. Prose. Correct.

**Beginning.** श्री लोकापार्श्वनाथाय नमः ।

सुयं मे आउ सन्तेणं भगवया एवमक्खायं एगे आया एगे द (...) एगा-
किरिया एगेलोए, एगेअलोए, एगेधम्मे, एगेअधम्मे, एगेबन्धे, एगेमोक्खे, एगे-
बन्धे, एगेमोक्खे, एगेपुण्णे, एगेपावे, एगेआसवे, एगेसम्बरे,

**End.** इसपवे सोमाढापोग्गला अनन्ता पयत्ता इसअमतद्विताती पोग्गला
अनन्ता पयत्ता इसगुणं कालगा अनन्ता पोग्गला अनन्ता, एवं वर्षेविं
गन्धेवि रसेविं फासेविं इसगुण पो (...) ग्गला पोग्गला अनन्ता पयत्ता .

**Colophon.** सम्मत्तं च ठाणमिति .

विषयः । जैनमते धर्माधर्मादिशरीरसगुणादीनां वर्णनम् ।

---

**No. 103.** तत्त्वसारः ( तन्त्रम् ) । Substance, country-made paper, 10 × 4 inches. Folia, 21. Lines, 5 on a page. Extent, 225 ślokas. Character, Bengali. Date ? Place of deposit, Cakradhá, *viâ* Nārāyanganj, Paṇḍit Kālicandra Vidyābhūṣaṇ. Appearance, old. Verse. Generally correct.

**Beginning.**

ॐ नमो भवाय ।

कैलासशिखरे रम्ये नानारत्नविभूषिते ।

आनन्दभैरवो देवः पप्रच्छानन्दभैरवीं ॥

श्री आनन्दभैरव उवाच ।

निगमागमशास्त्राणि मया तथा प्रकाशितं । (?)

तेषां मध्ये सारभूतं वद कान्ते कुलेश्वरि ॥

पुरा श्रीतन्त्रशास्त्रोक्तं बहुविधं मया ।

श्रीयन्त्रयामलाख्यञ्च तथाचोत्तरतन्त्रकं ॥

शक्तियामलमाख्यातं तथान्यं विस्तरं प्रिये ।

योगसारं समाख्यातं तथा गुह्यं वदस्व मे ॥

श्री आनन्दभैरव्युवाच ।

योगसारं तत्त्वसारं सर्व्वशास्त्रोत्तमोत्तमम् ।

प्रधानं सर्व्वशास्त्राणां तन्त्रादीनाञ्च भैरव ॥

यो न जानाति देवेश तस्य सिद्धिर्न जायते ॥

... ... ... ...

तत्त्वसारं विना यत्तु तत्सर्व्वं निष्फलं भवेत् ॥

... ... ... ...

श्री आनन्दभैरव उवाच ।

तत्त्वसारस्य माहात्म्यं वदस्वानन्दभैरवि ॥ इत्यादि ।

**End.**

यो नो पठेत् इमं मन्त्रं तस्य सिद्धिर्न जायते ।

अयमं शशिदां पीत्वा सर्व्वकर्म्माणि साधयेत् ?

न पिबेद् यदि मोहेन तस्य सिद्धिर्न जायते ॥

**Colophon.** इति श्रीतत्त्वसारे दशमः पटलः ।

विषयः । इति तत्त्वसारे १म २य पटलः । तत्त्वसारे शुद्धितत्त्वविधाने तृतीयः पटलः ।

तन्त्रसारे ४र्थः पटलः । तन्त्रसारे श्रीमद्दानन्दभैरवभैरवीसंवादे कवचसंस्कारो नाम पञ्चमः पटलः । तन्त्रसारे षष्ठीसाधनाक्रियोपाख्याने षष्ठः पटलः । तन्त्रसारे ७म पटलः । ८मः पटलः । नवमः पटलः । दशमः पटलः । सामान्यतो योगविधायकोऽयं ग्रन्थः ।

निगमतत्त्वसारः ।

---

**No. 104.** तत्त्वामृततरङ्गिणी । By कुलानन्दनाथ । Substance, palm leaf, 20 × 2 inches. Folia, 23. Lines, 5 on a page. Extent, 690 slokas. Character, Bengali. Date 1660. Place of deposit, Gaņeśamahallā, Benares City, Rāj Guru's Maṭha Appearance, very old. Very correct.

**Beginning.** प्रणम्य गुरुपादाब्जं ज्ञानानन्दरसाश्रयं ।
नत्वा ते तत्त्वसाराख्यं तत्त्वामृततरङ्गिणीम् ।
"नन्दे" दशमतत्त्वपदे श्रीमत् पूर्णचन्द्रे ।
चिन्मयचिद्विलासं पंचपीठान्तरस्थः ।
अभयवरकराब्जो योग (...) कुलकमलविलासी पातु मां देवदेवः ।

**End.** चिदानन्दः करयोगीरो निर्विकारः सदाशुची । ( ... ... )
श्रीकुलानन्दनाथेन श्रीनाथपदसेविना ।
ज्ञानीदेऽयंसमंदीय तत्त्वामृततरङ्गिणी ।

**Colophon.** इति तत्त्वामृततरङ्गिण्यामात्मविवेकोनाम सप्तमस्तरङ्गः ।
शून्यषट्शतचन्द्रे च गते शाकेऽसिते बुधे ।
वैशाखे लिखिता ग्रन्थे तत्त्वामृततरङ्गिणी ।

विषयः । प्रथमतरङ्गे गुरुशिष्यलक्षणम् . द्वितीयतरङ्गे शिष्यसम्बोधनम् . तृतीयतरङ्गे जीवशिवसम्वादः . चतुर्थतरङ्गे महामायाविवेचनम् . पञ्चमतरङ्गे प्रकृतिपुरुषविवेचनम् । षष्ठतरङ्गे अभेदकथनम् . सप्तमतरङ्गे आत्मविवेकः .

---

**No. 105.** तत्त्वार्थरत्नाकरः By प्रभाचन्द्र । Substance, country-made paper, 12 × 5 inches. Folia, 94. Lines, 22 on a page. Extent, 2,266 slokas. Character, Nāgara. Date, Saṃvat 1697. Place of deposit, Benares City, Diṅmaṇḍalācārya Mahārāja Bālacandra Sūri. Appearance, old. Incorrect.

**Beginning.** अथ प्रथमतः १० संज्ञाविचित्रपत्राणि न सन्ति.
सत्यनामा ग्रभवतु . जिनप्रतिमाचैत्या (.) . जिन प्रसाद मद्यांकादि

( ... ) नान्तरौ . तत्र संजनवार्त्तां जानाति , यतत् को विशेषः ( ... ... ... ... ) मिथ्यात्ववैरौगुणस्थानचतुष्टये . चतुर्थकं कतिपया, इत्यादुपचन्दचारी, चतुर्थगतवत् भाव॰कौशवत् . कुशाल द्वारसंग्राम एवा ( . ) हि कुशाल जानाति . ज्ञानकुशाल एवं विशेषः . इति भावार्थः .

**End.** एवं विचार्य्य मोक्षपदार्थभावनाज्ञातव्या इति भावार्थः . इति तत्त्वार्था· धिगमे मोक्षाख्ये दशमोऽध्यायः .

**Colophon.** इति तत्त्वार्थरत्नाकरग्रन्थे सर्व्वार्थसिद्धौ मुनिश्रीधर्मचन्द्रशिष्यप्रभाव-चन्द्रविरचिते ( ... ... ) श्रोतव्यनिमित्ते मोक्षपदार्थकथनं नाम दशमोऽध्यायः . इति सर्व्वार्थसिद्धस्य टीका समाप्ता . संवत् १९९० । कार्त्तिक वदि .

विषयः । सर्व्वार्थसिद्धव्याख्या ।

---

**No. 106.** तलवकारोपनिषत्पदभाष्यटिप्पनम् । Substance, country-made paper, 15 x 4 inches. Folia, 6. Lines, 18 on a page. Extent, 216 slokas. Character, Bengali. Date ? Place of deposit, Gaṇeśa-maballā, Benares City, Rāj Guru's Muṭha. Appearance, old. Prose. Correct. .

**Beginning.** ॐ नमः परमात्मने .

यच्छ्रोत्रादेरविज्ञातं चक्षुर्वागाद्यगोचरं ।
ज्ञातोऽप्यज्ञं परंब्रह्म नित्यमुक्तं भवामितत् ॥

केनेषितमित्यादिकां तलवकारशाखोपनिषदं व्याचिख्यासुर्भगवान् भाष्यकारोऽयं प्रत्यगोचरस्यात्मनःसंसारित्वादसंसारिब्रह्मभावस्य उपनिषत्प्रतिपाद्यत्वासम्भवात् निर्विषयत्वाद्व्याख्येयत्वाभावाच्छास्त्रारम्भाविषयः संसारित्वप्रापकप्रमाणविषयत्वात् ब्रह्मताप्रतिपादने विरोधासम्भवात् सविषयत्वात् व्याख्येयत्वं प्रतिजानीते केनेषितमित्यादिना ॥

**End.** यो वै सर्व्वेश्वरो विष्णुः सर्व्वात्मा सर्व्वदर्शनः ।
ग्रहः बोधाम्बुधिः साक्षात्सोऽयं नित्योभयः प्रभुः ॥

एवं तलवकारस्य भाष्ये शङ्करनिर्मिते ।

पदभाष्याभिधानेऽस्मिन् विरचामि सुटिप्पणम् . ॥

**Colophon.** इति तलवकारोपनिषत्पदभाष्यटिप्पणं सम्पूर्णम् .

विषयः । तलवकारोपनिषत्शङ्करभाष्यव्याख्या .

---

**No. 107.** ताजिकपद्धतिटीका, By केशवाचार्य्य । Substance, country-made paper, 14 × 8 inches. Folia, 7. Lines, 9 on a page. Extent, 250 slokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Garvetá, Grām Khunverā, Babu Vaikuṇṭha Náth Cakravarti. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ श्रीसूर्याय नमः ।

यत्ताजिकोक्तं फलं वाचनोक्तं

क्रमाद्योक्तमन्यैर्यतो दुर्गमेतत् ।

क्रमाद्वच्मि तत्पद्धतिं प्रस्फुटोक्त्या

गणेशं नमस्कृत्य बालावबोधं ॥

ज्ञात्वा जन्म घटोदयात् प्रतिसमं जन्मार्कतुल्यो रवि

र्यत्र × × युतं भवेद्गतसमाः मेषादिदिग्घ्नाः हृताः ।

खाभ्रैर्भेनिवासवादिसहितास्तुङ्गानवैवादिभेः

स्वादिः वासवधे स्फुटोऽब्जनिको मासः क्वचि × × युक् ॥

अस्यार्थः । स्फुटमासानुसारेण यथान् उदयात् द्वादशभावान् स्फुटीकृत्य वर्षलग्नं कार्य्यं । इत्यादि ।

**End.** अथ लग्नपतिर्वर्षनवांशपतिलग्नयोर्मित्रत्वे यथा × दृष्टिः यथा चन्द्रदृष्टो उच्चस्थो वा तदा लग्नोः शुभप्रदो तयोर्वैरत्वे यथा नीचस्थौ तौ अपमित्रौ तदा न शुभौ एवं अन्यत्रेषु भावेषु तदधिपतिलग्नवांशपतिश्च विचार्य्यः । पूर्व्ववत्तयोरपि मित्रत्वे शुभं वैरा × यद्व × मिति मिश्रे मिश्रफलं ज्ञेयं ॥

**Colophon.** इति श्रीकेशवाचार्य्यरचितताजिकपद्धतिटीका समाप्ता ।

विषयः । ताजिकपद्धतेर्व्याख्यानं ।

---

**No. 108.** तिथिनिर्णयः । By भट्टोजिदीक्षित । Substance, country-made paper, 10×4 inches. Folia, 33. Lines, 13 on a page. Extent, 900 slokas. Character, Nāgara. Date, Samvat 1878. Place of deposit, District Chāprā Sisoyā, Paṇḍit Rāmanāth Misra. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।
चैत्रशुक्लप्रतिपदि वत्सरारम्भः ।
तत्रौदयिकी तिथिर्ग्राह्या ।
चैत्रे मासि जगत् ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रं तु तदा सूर्योदये सतीति ॥
हेमाद्रौ ब्रह्मोक्तेः । इत्यादि ।

**End.** चतुर्भुजाभ यवसौ भूत्वा त्वं चोलिकाशिशौ ।
अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भवेत (?) इति दिक् ।
इति चोलिका निर्णयः ॥

**Colophon.** इति पदवाक्यप्रमाणज्ञ-श्रीलक्ष्मीधरसूरेः सूनुना भट्टोजिदीक्षितेन विरचिततिथिनिर्णयः समाप्तः ॥ संवत्—१८७८ ॥

विषयः । प्रतिपदादिसकलतिथिव्यवस्थाकथनं ॥ चोलिकानिरूपणञ्च ॥

---

**No. 109.** तिथिनिर्णयः । वैद्यनाथ । Substance, country-made paper, 10×4 inches. Folia, 22. Lines, 11 on a page. Extent, 500 slokas. Character, Nāgara. Date, Samvat 1821. Place of deposit, District Chāprā, P.O. Gopālganj, Harapurā Paṇḍit Jagadeo. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।
विश्वानेश्वरयोगिना भगवतानन्तेन भट्टेन च ।
श्रीमद्भोजमहीभुजे तिथिगतो यो निर्णयोऽभीहितः (?) ॥
सोऽयं सम्प्रति वैद्यनाथविदुषा संक्षेपतः कथ्यते ।
ज्योतिर्वेदविदामनिन्दितधियामानन्दसम्भूतये ॥
तत्रैकभक्तानां अङ्गभूतासु प्रतिपदादितिथिषु साधारणो निर्णयः ॥

**End.** प्राक्पक्ष एव कथितोऽनु वशिष्ठमुख्यैः ।
जीवत्सु पक्षेऽपि पुनः शिष्टविपश्चः ।

**Colophon.** इति ग्रहणादितिनिरूपणं। अनेकवाक्यविरोधानेकवाक्यसम्मति-
पादनादितिथिनिर्णयोद्देशकनामाष्टमः परिच्छेदः, निरूपणं समाप्तं॥
संवत—१८२१।

**विषयः।** ...तपदादितिथिकृत्यनिर्णयग्रहणादिकथनं॥

---

**No. 110.** तिथिविवेचनम्। By रमापतिसिद्धान्त। Substance, country-made paper, 12×4 inches. Folia, 72. Lines, 6 on a page. Extent, 1800 ślokas. Character, Bengali. Date, Śaka 1332. Place of deposit, Cakradhá *viá* Nārāyanganja. Paṇḍit Kālī Candra Vidyābhūṣaṇ. Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय।

प्रायशः सङ्कल्पानामेव कर्म्मणामारम्भकत्वात् आदौ स एव निरूप्यते। कायवाङ्मनोभिरर्चितं कर्म्म फलाय समर्थमिति श्रुत्या वयाचां मङ्गल-मुक्तं। तत्र केन रूपेण कस्यात्मनित्यत आह मनसा संकल्पयति वाचा अभिलपति कर्म्मणा चोपपादयतीति। इत्यादि।

**End.** अथ सुवर्णदानं। भविष्ये।

तथा तस्यां तृतीयायां यद्ददेषि ब्राह्मणाय वै ?।
माषयोड़शमात्रं वा सुवर्णं यः प्रयच्छति॥
सदैमरत्नखचिते विमाने सर्व्वगे शुभ।
सर्व्वपापविनिर्मुक्तः सर्व्वभूषणभूषितः॥
ततो रुद्रस्य सायुज्यं प्राप्नोति च न संशयः॥

... ... ... ... ...

तथाच शाख्ये।
सर्व्वदानानि नियमा व्रतानि च तपांसि च।
यत्रो दानं तथा जप्यं शास्त्रं सुरपूजनं।
गङ्गाया × × कृतं सर्व्वं कोटिकोटिगुणं भवेत्॥

**Colophon.** इति श्रीरमापतिसिद्धान्तविरचितं तिथिविवेचनं समाप्तं॥
पक्षचिकाक्षेन्दुमिते च शाके
कृष्ण भवानीचरणार्पितम्।

नभश्चसा × × × × × × ।

× × × यमाद् रघुनाथकर्ता ॥ श्रीकृष्णाय नमः ॥

विषयः । संकल्पनिरूपणं । मलमासविवेचनं । मासपक्षतिथिनियमनं । नक्षत्रविवेचनं । विकल्पविचारः । युग्मादिविवेचनं । अधतिथिव्यवस्था । प्रतिपदादितिथिकृत्यनिरूपणं । श्रीकृष्णाष्टमी, अशोकाष्टमी, श्रीरामनवमीनिरूपणं । दुर्गोत्सवकृत्यनिरूपणं । देवीमाहात्म्य-पाठफलकथनं । चातुर्मास्यव्रतादिविवेचनं । मलकृत्यनिरूपणं ।, दानव्यवस्था, तत्र भूमिदान-विधिफलादिकथनं । सुवर्णदानविधिफलादिकथनञ्च ।

---

**No. 111.** तिमिरचन्द्रिका । By रामरत्न । Substance, country-made paper, 20 x 5 inches. Folia, 56. Lines, 7 on a page. Extent, 1400 slokas. Character, Bengali. Date ? Place of deposit, Śivapur *via* Tangail, Paṇḍit Bhavāninath Bhaṭṭācāryya. Appearance, old. Verse. Generally correct.

**Beginning.** गुरवे नमः

विद्यावासरशर्वरी समकरा चैतन्यचन्द्रोदया
नानाचारविचारविश्वविमलज्ञानैकगम्याकृतिः ।
कापिध्यानसुतानन्दपदचिन्ता पाप × × × × ।
× × × × विधायिनी हृदि मया संध्यायते पूर्णिमा ॥
कलौ स्वल्पायुषः सर्व्वे साधकाः स्वल्पबुद्धयः ।
विधास्ये साधनं तेषां येन सूक्ष्मं भवेत् × × ॥
नानागमसमुद्रेभ्यो नानानिगमसागरात् ।
विविच्य पद्यरत्नानि निबध्नन्ते समासतः ॥
श्रीरामरत्नरचितां कृत्याकृत्यतमोनुदां ।
× × × × पश्यन्तु गुरवः प्राचीनपद्यनिर्म्मितां ॥
विविधविबुधजनवक्त्रविषमनानुसारेण जडबुद्धीनां
नानाविधसंशयतिमिरौघो ज्ञानलघुदूरीकरणाय
तिमिरचन्द्रिका नाम संग्रहो दीप्यतु । इत्यादि ।

**End.** यदि नो स्मर्य्यते नूनं तदा नैव शुभं भवेत् ।
एवं ज्ञात्वा नरेशानि प्रातिस्वस्त्ययनमाचरेत् ॥
इति शिवार्च्चिः ।

**Colophon.** इति तिथिरत्नचन्द्रिकायां सप्तमोल्लासः ॥ ( अतः परं खण्डितं )

विषयः । दुर्गोत्सवादिनिर्णयः । प्रातःकृत्यनिर्णयः । स्नानाचमनादिनिर्णयः । सन्ध्यादि-विधिनिर्णयः । स्नानशोधनादिपूर्वकपूजानिर्णयः । उपचारादिनिर्णयः । नित्यपूजा-विधानादिनिर्णयः । यज्ञादिनिर्णयः । मालादिनिर्णयः । नित्यजपादिनिर्णयः । कुम्भादि-निर्णयः । शयनविधाननिर्णयः ।

---

**No. 112.** तुलापुरुषपद्धतिः By मानसिंह । Substance, country-made paper, 14 × 4 inches. Folia, 19. Lines, 7 on a page. Extent, 400 slokas. Character, Bengali. Date ? Place of deposit, Cakradhā *via* Nārāyanganja, Paṇḍit Kailās Candra Bhaṭṭācāryya. Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रणम्य गोविन्दपदारविन्दं नत्वा गुरूंश्चैव तथा द्विजेन्द्रान् ।
धर्म्मार्थकामादिचतुष्टयार्थं प्रकुर्वते सत्कृविदुषां मतेन ॥
विचार्य्य धर्म्मशास्त्राणि दानसागरसंस्थिताः ।
क्रियते मानसिंहेन तुलापुरुषपद्धतिः ॥
तथाच शिवपुराणे अयने द्वे युगाद्यायां तथा च विषुवद्द्वये ।
चन्द्रसूर्य्योपरागे च वैशाख्यां कार्त्तिकेषु च ॥
कर्णुखोपचयोपेते तथा मन्वन्तरासु च ।
चतुर्दश्यष्टमीष्वेव पौषमास्यां विशेषतः ॥ (?)

— — — — —

धर्म्मोऽथ्वसबस्य देवताभवसन्निधौ ।
महादानानि देयानि नाप कार्य्यां विचारणा ॥ इत्यादि

**End.** मध्ये विष्णुगोविन्दप्रतिमाचयं स्वकल्याणां स्थापयेत् । शिव × × देव-द्वयमन्यमध्यायां स्थापयेत् । शिरोदेशे नागकुम्भं शिलापत्रकाभार्थं पञ्च-रत्नान्वितं कलशमाच्छादितं स्थापयेत् । ततो गुरुः सर्व्वमाविनाधारणं-नित्राक्षतं जपेत् —

**Colophon.** ( अतः परं खण्डितं )

विषयः । तुलापुरुषदानविषयकविधिनियमादिकथनं ॥

---

**No. 113.** तृचकल्पपद्धतिः By वैद्यनाथ। Substance, country-made paper,1 5 × 5 inches. Folia, 11. Lines, 17 on a page. Extent, 275 slokas. Character, Nāgara. Date ? Place of deposit, BenaresCity, Govinda Bhaṭṭa. Appearance, new. Prose and verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

देशकालौ संकीर्त्य ममामुकरोगस्य सद्यः नाशद्वारा चिरारोग्यप्राप्तये तृचकल्पोक्तप्रकारेण तृचस्य न्यासपूर्वकं सप्तसंख्यं पीठपूजनं प्रधानमूर्त्तिपूजां —इत्यादि ।

**End.** आरोग्यसिद्धैर्विविधौषधीनां सूर्यार्घदानस्य शुभप्रयोगः ।

देवाकरिर्लुं समतानुरूपं श्रीवैद्यनाथो रचयाञ्चकार ॥

**Colophon.** इति श्रीयोगकोशस्थतृचकल्पपद्धतिः.

विषयः । वेदोक्तभगवद्भास्करार्घप्रदानादिविधानम् .

---

**No. 114.** तैत्तिरीयकभाष्यटीका By प्रकटार्थकार. Substance, country-made paper, 15 × 4 inches. Folia, 23. Lines, 22 on a page. Extent, 621 slokas. Character, Bengali. Date ? Place of deposit, Gaṇesamahallā, Benares City, Rāja Guru's Maṭha. Appearance, new. Prose. Incorrect.

**Beginning.** ॐ श्रीगुरवे नमः ।

यत् प्रकाशसुखाभिन्नं यन्मायेव प्रकाशितं ।

विततं भाष्यते यद्व तत् स्या × × दृश्यनिर्भयम् ।

यजुर्वेदशाखाभेदं तैत्तिरीयकोपनिषदं व्याचिख्यासुर्भगवान् भाष्यकारस्तत्-प्रतिपाद्यं ब्रह्मजगज्जन्मादिकारणत्वेन तटस्थलक्षणेन मन्दमतीन् प्रति सामान्येनोपलक्षितं सत्यज्ञानादिना च स्वरूपलक्षणेन विशेषतो विनिश्चितं नमस्कारच्छलेन संक्षेपतो दर्शयति, यस्मात्ज्जातमिति ।

**End.** तैत्तिरीयकभाष्यस्य शङ्करस्य प्रकटीयसः ।

स्फुटार्थे × × कामेभ्यो निरमायि सुविष्पनम् ।

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीप्रकटार्थकारविरचिता भ्रुगुवल्लीभाष्य-टीका समाप्ता . समाप्तेयं तैत्तिरीयकभाष्यटीका .

विषयः । तैत्तिरीयकोपनिषद्व्याख्या .

---

**No. 115.** तोताद्रिमठस्थगुरुपरम्परा । Substance, country-made paper, 9 × 4 inches. Folia, 5. Lines, 7 on a page. Extent, 80 slokas. Character, Nāgara. Date ? Place of deposit, Śaṅkara Maṭha, Paṇḍit Madhusūdan Tīrthasvámi. Appearance, old. Verse. Generally correct.

**Beginning.** श्रीमते रामानुजाय नमः । अस्मद्गुरुभ्यो नमः । अस्मत् परमगुरुभ्यो नमः । अस्मत् सर्व्वगुरुभ्यो नमः । श्रीमते रामानुजाय नमः । श्रीपराङ्कुशदासाय नमः । श्रीमद्यामुनमुनये नमः । श्रीराममिश्राय नमः । श्रीपुण्डरीकाक्षाय नमः । श्रीमन्नाथमुनये नमः । श्रीमते शठकोपाय नमः । श्रीमते विष्वक्सेनाय नमः । श्रियै नमः । श्रीधराय नमः ।

अस्मद्देशिकमस्मदीयपरमाचार्य्यानशेषान् गुरून्
श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णौ (?) मुनिं यामुनं ।
रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणं
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये ॥
श्रीमन्नाभरणं तेजः श्रीरङ्गमयमाश्रये ।
चिन्तामणिमिवोद्भान्तमुत्सङ्गेऽनन्तभोगिनः ॥ इत्यादि ।

**End.** शठरिपुयतिराट् श्रीरम्यजामातृयोगि—
प्रवरमननभूम्नद्योगिसञ्जातभक्तिं ।
प्रमदमगुणपूर्णं नौमि रामानुजाख्यं
परिचितनिगमान्तद्वन्द्वमार्गं यतीन्द्रं ॥

विषयः । रामानुजादिश्रीधरान्तगुरूणां प्रत्येकं कतिपयश्लोकैः स्तवनं ।

---

**No. 116.** त्रिकाण्डमण्डनभाष्यम् । Substance, country-made paper, 16 × 7 inches. Folia, 75. Lines, 22 on a page. Extent, 1,650 slokas. Character, Nāgara. Date, Saṃvat 1923. Place of deposit, Benares City, Vāmanācāryya. Appearance, new. Prose. Correct.

**Beginning.** भुजङ्गा भुजगा यस्य वामना वामलोचना ।
सर्व्वदः सर्व्वदा दिश्यात् सशिवः स शिवः स्वयं ॥ १ ॥
उर्द्धमेतिर्य्यगति सिध्यति धर्म्मसेतु ।
तच प्रमाय वचनैः सनकेतरैश्चेत् ।

येषां प्रकाशनदशा च गुरोः प्रकाशात् ।
तच्चात्मनेनमथनाद्रतो नमामि ॥

**End.** यं खल्वाने प्रायश्चित्तनिर्णयाधिकारे. बहुविकारो विस्तारो यत्र एवं भूतं प्रायश्चित्तान्तरं कान्दनादिषु वक्ष्ये वदिष्यामि इतीत्यादि पूर्वेणान्वयः ॥

**Colophon.** इति त्रिकाण्डमण्डनविवरणे पुनराधेयनिमित्तनिर्णयो नाम तृतीयकाण्डं ॥

विषयः । त्रिकाण्डमण्डनस्य पुनराधेयनिर्णयपर्यन्तव्याख्या .

---

**No. 117.** त्रिपुरी । Substance, country-made paper, 12×4 inches. Folia, 1. Lines, 16. Extent, 30 ślokas. Character, Bengali. Date ? Place of deposit, Puri, Śaṅkara Maṭha. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः परमात्मने ।

शब्दस्पर्शरूपरसगन्धाद्यो विषयाः पञ्चपृथिव्यादयश्च परमात्मनः समुत्पन्नाः पृथिव्यापस्तेजोवायुराकाशमिन्द्रियाणि अहङ्कारो बुद्धिर्मनश्चान्तःकरणं । तत्र पृथिवी धारणे । आपः पिण्डीकरणे क्लेदने च । तेजः पचने प्रकाशने च । वायुर्व्यूहने । आकाशमवकाशप्रदाने । इत्यादि ।

**End.** जाग्रत्स्वप्नसुषुप्त्येकत्र वा जागरिते वैश्वानरः स्वप्ने तैजसः ? सुषुप्ते प्राज्ञः । स एव निर्विशेषस्तुरीयः स परमात्मा सोऽहमिति ॥

**Colophon.** इति त्रिपुरी समाप्ता ।

विषयः । संक्षेपेण वेदान्तवेद्यपञ्चभूतेन्द्रियजीवब्रह्मादीनां प्रकाशनं ।

---

**No. 118.** त्रिपुरीटीका । By आनन्दगिरि । Substance, country-made paper, 12×4 inches. Folia, 3. Lines, 16 on a page. Extent, 100 ślokas. Character, Bengali. Date ? Place of deposit, Puri, Śaṅkara Maṭha. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो भगवते वासुदेवाय ।

अध्यात्मादिप्रभेदेन यद्विद्या विभज्यते ।
तद्रूपं ब्रह्म सत्यमानन्दमात्ममव्ययं ॥

मुमुक्षूणां जीवब्रह्मैक्यज्ञानमेवमोक्षसाधनमिति न्यायेन तत्प्राप्त्यै त्रिपुटीतिप्रकरणमारभमाणः सुखप्रतिपत्त्यर्थमध्यारोपापवादन्यायेन तत्त्वमुपदिदिक्षुरध्यारोपप्रक्रियया प्रथमं सृष्टिमाचष्टे पृथ्वेति । इत्यादि ।

**End.** संप्रति अत्र × ×, निवर्त्य परिशोधितं तत्पदार्थमनूद्य तत्र तत्र प्रत्यगात्ममात्रत्वं कथयति सोऽहमिति । इति प्रबन्धेन प्रकरणं परिसमापयन् यथोक्तवाक्यार्थपरिज्ञानादज्ञान × × × × निवृत्त्या पूर्णपरमानन्दाविर्भावेन कृतकृत्यो भवतीत्येतदनवद्यो भवतीति ॥

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामानन्दपूज्यपादशिष्यभगवदानन्दगिरिविरचितं त्रिपुटीविवरणं समाप्तं । श्रीगणेशाय नमः । श्रीकृष्णार्पणमस्तु ।

विषयः । संक्षेपेण पञ्चभूतजीवमध्यादिज्ञापकस्य त्रिपुटीतिनामकस्य प्रकरणस्य व्याख्यानं ।

---

**No. 119.** त्रिवर्णाचारः By जिनसेन । Substance, country-made paper, 14×6 inches. Folia, 265. Lines, 12 on a page. Extent, 6,625 ślokas. Character, Nāgara. Date Saṃvat 1844. Place of deposit, Benares City, Diṅmaṇḍalācārya Mahārāja Balacandra Sūri. Appearance, new. Verse. Correct.

**Beginning.** ॐ नमः सिद्धेभ्यः ।

तज्जयति परं ज्योतिः समं समस्तैरनन्तपर्यायैः ।
दर्पणतल इव सकला प्रतिफलति पदार्थमालिका यत्र ॥
परमागमस्य जीवं निषिद्धजात्यन्धसिन्धुरविधानं ।
सकलनयविलसितानां विरोधमथनं नमाम्यनेकान्तम् ॥

**End.** धर्मार्थकामाय कृतं सुशास्त्रं श्रीजिनसेनेन त्रिवर्णभाषि ।
ये च त्रिवर्णेषु सदा रता वै कुर्वन्तु ते ज्ञानं मनोज्ञभावे ॥

**Colophon.** इत्यार्षे श्रीमद्भगवत्सारविन्दात् विनिर्गते श्रीगौतमर्षिपादपद्माराधकेन श्रीजिनसेनाचार्येण विरचिते त्रिवर्णाचारे उपासकाध्ययनसारोद्धारे सूतकशुद्धिकथनीयं नाम अष्टादश पर्व इति त्रिवर्णाचारः समाप्तः. संवत् १८४४. वैशाखशुक्लाष्टम्यां चन्द्रवासरे. लिखितं काशीमध्ये रामप्रसादब्राह्मण । ?

(

विषयः। प्रथमपर्वणि पूजकलक्षणम्, द्विजातिनिर्णयप्रकरणम्, ऋषभदेवस्य पञ्चकल्याणकवर्णनम्, द्विजोत्पत्तिः भरतराजस्वप्नोक्तश्रमणफलवर्णनञ्च. द्वितीयपर्वणि सामरिकादिकथनम्. तृतीयपर्वणि शौचाचारकथनम्. चतुर्थपर्वणि स्नानवस्त्राचमनसन्ध्यार्घनित्यतर्पणनित्यनैमित्तिकश्राद्धादिकं कथितञ्च. पञ्चमपर्वणि गृहस्थधर्मः, देवपूजानिरूपणञ्च. षष्ठपर्वणि जिनतर्पणम्, जिनस्तुतिकथनञ्च. सप्तमपर्वणि मन्त्रोपदेशकथनम्. अष्टमपर्वणि लोकसंस्थानमध्यलोकस्थवर्णनञ्च. नवमपर्वणि जिनचैत्यालयागमनादिभोजनान्तक्रियाप्रतिपादनम्. दशमपर्वणि स्वव्यापारकथनम्. एकादशपर्वणि शयनविधिः, रात्रिकृत्यं, गर्भोत्पादनं,-शरीरवर्णनञ्च. द्वादशपर्वणि गर्भाधानादिपञ्चदशक्रियास्वरूपवर्णनम्. त्रयोदशपर्वणि मोञ्जीबन्धनादिज्ञातवर्णनम्. चतुर्दशपर्वणि ब्रह्मस्वरूपवर्णनम्. पञ्चदशपर्वणि विवाहविधिवर्णनम्. षोडशपर्वणि वर्णलाभादिपञ्चक्रियावर्णनम्. सप्तदशपर्वणि अशौचप्रकरणवर्णनम्. अष्टादशपर्वणि सूतकशुद्धिकथनम्.

---

No. 120. "दयानन्दपराभवः." Substance, country-made paper, 8 × 3 inches. Folia, 6. Lines, 7 on a page. Extent, 84 slokas. Character, Nāgara. Date ? Place of deposit, Bibihāṭi, Paṇḍit Vāmanācārya. Appearance, new. Verse. Correct.

**Beginning.** श्रीमद् वयमौवाय नमः।

श्रीमद्वैदिकसंवेद्यरघुराजेन्द्रविक्रमात्।
योऽप्राप्नोद्रघुराजत्वं बान्धवेशः स इन्द्रवात्।
श्रीकाशीनगराधीशकाशीराजसमाश्रया।
दयानन्दो निरानन्दो वामनेन प्रकाश्यते॥

**End.** तत एवं पराभूतं दृष्ट्वा श्रीमदीश्वरीप्रसादनारायणाभिधं महाराजं सर्वे जनाः जयशब्दैः समं तोषयन्ति॥

**Colophon.** इति दयानन्दनिराकृतिप्रपञ्चसारः सुधीभिर्विभावनीय इति शम्.

विषयः। वामनाचार्य्यकर्तृकदयानन्दपराजयः.

---

No. 121. दानदीपावलिः। By योगीश्वर। Substance, palm leaf, 13 × 1 inches. Folia, 128. Lines, 6 on a page. Extent, 2300 slokas. Character, Uria. Date ? Place of deposit, Śāsana Dāmodarpur, Puri, Paṇdit Sadāśiva Kāvyakaṇṭha. Appearance, old. Prose and verse. Incorrect.

**Beginning.** श्री गणेशाय नमः ।

जय सर्व्वसुराराध्य जय संसारमोचन ।
जय विघ्नतमश्चन्द्र जय सिद्धिप्रदायक ॥
लम्बोदरमवलम्बे जयमविलम्बे ददानमपवर्गं ।
यन्मौलिचन्द्रलेखा सिन्दूरितानमङ्कुरया जयति ॥
यवन्द्रान्वयसिन्धु × × × × नित्यं
स कंसमथनमपरौ मण्डयन् × × × ।
श्रीलक्ष्मीधरमीश्वरप्रविलसद्वंश्यो महाभूनिभान्
योऽयं कृत्यस्वभावप्रभवनयवरप्रीतिमिद्धाश्चभक्तिः ।
श्रीमद्भिःमद्दभानुः क्षितिपपदयुगयोऽर्थं
... ... ... ... (?)
(श्रीनत्वार्थादि तनुपवयपरिचया भारताद्युक्तकीर्णौ) (?)
नित्यानुष्ठानतैक्षा सुचरितविनया सत्यवैश्वानराधिः ।
श्रद्धाभाजां बुधानां विरचयतु चतुर्वर्गमार्गप्रकाशं
× × × × ॥

देवल-याज्ञवल्क्यौ मनुर्लिखितगौतमवृद्धवसिष्ठवसिष्ठा' विष्णुबृहस्पति-
पराशरांगिरसयोगियाज्ञवल्क्यशातातपमरीचिवदिष्टाः (?) सम्वर्त्तापस्तम्बौ
लघुहारीतः सहारीतः दानव्यासो व्यासः सलघुकात्यायनः बौधायन-
व्याघ्रपश्चिकप्रचेतयवाज्ञिखिलानि (निरूप्य (?) निपुणं सृतयः षट्त्रिंशन्मतं
यावत्)। ... ... ... महाभारतमन्वादितोक्तानि (?) ज्योतिषनानागम-
मतैर्यार्थैः प्रमाणकैरनुकृतानि । अथ दानपरिभाषा । इत्यादि ।

**End.** सर्वप्राप्तिकामोऽहमित्युक्त्वा पुत्रपौत्रयोग्यां प्रियदत्तां भूमिं ददानि तस्या-
दिलौकाराम्नं पूर्व्ववत् ।

**Colophon.** इति श्रीदानदीपावल्यां भूमिदानविधिर्नामचतुर्विंशतितमोऽध्यायः ।

( अतः परं खण्डितं )

विषयः । इति श्रीमन्महाराजाधिराजगजपतिनिःशङ्कभानोर्लक्षितपदकमलधूलिकला-
पालङ्कृतपाश्वयोगीश्वरविरचितायां दानदीपावल्यां पुण्यदेशकीर्त्तनं नाम प्रथमोऽध्यायः । पात्रा-
पात्रनिरूपणं २ । ३ । तुलापुरुषदानं । ४ । हिरण्यगर्भमहादानविधानं । ५ । ब्रह्माण्डमहा-
दानविधानं । ६ । गोसहस्रमहादानविधानं । ८ । कामधेनुमहादानविधानं । ९ । हिर-

धान्यरत्नमहादानविधानं । १० । हेमहस्तिरथमहादानविधानं । ११ । पञ्चलाङ्गलकमहादान-विधानं । १२ । धरामहादानविधानं । १४ । कल्पलतामहादानविधानं । १५ । सप्तसागर-महादानविधानं । १६ । रत्नधेनुमहादानविधानं । १७ । महाभूतघटमहादानविधानं । १८ । धान्याचलादिदशाचलविधिः । १९ । २० । गोप्रदानगुडधेन्वादिधेनुदानविधिः । २१ । चन्द्र-दैवताकाशकुसुमगोदानविधिः । २२ । भूमिदानविधिः । २४ ।

---

**No. 122.** दानरत्नप्रदीपिका । By चन्द्रचूडः । Substance, country-made paper, 17 × 4 inches. Folia, 10. Lines, 7 on a page. Character, Bengali. Date ? Place of deposit, Pāruikurā, Chittagong, Paṇḍit Kālikānta Vācaspati. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।

सर्गादौ चन्द्रसोपानदानसागरपद्धतिः ।
क्रियते चन्द्रचूडेन दानरत्नप्रदीपिका ॥

प्रागस्तमनोत्तरदिने गयादौ दाता प्रेतक्रियाधिकारी × × × × × × × तदनु कृतनित्यक्रियः गुरुकुलद्विजयोरनुज्ञां गृहीत्वा दानव्याख्यानमाचरेत् ॥ इत्यादि ।

**End.** नमो ऽयं सवत्सालङ्कारसोपकरणगजो विष्णुदेवताकः ।
अद्येत्यादि कृतैतत् सवत्सालङ्कारसोपकरणगजदानकर्माविघ्नमस्तु ।
अच्छिन्नत्वात् समाप्तिवाक्यं नास्ति ।

**Colophon.**

विषयः । तिलदानविधिकथनं । भूम्यासनादिदानविधिकथनं ॥ धेनुदानविधिकथनं ॥ दोलादानविधिकथनं । गजाश्वनौकादिदानविधिकथनं ॥

---

**No. 123.** दिव्यसिंहकारिका । Substance, palm leaf, 17 × 1½ inches. Folia, 75. Lines, 6 on a page. Extent 2700 slokas. Character, Uria. Date ? Place of deposit, Dāmodarpur Śāsana, Zilla Puri, late Paṇḍit Gopināth Misra. Appearance, old. Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः । अविघ्नमस्तु ।

वात्स्यायनसमुत्पन्नो दिव्यसिंहाभिधः सुधीः ।
एकतः स्मृतिवाक्यानि लोपयित्वा लिखाम्यहं ।

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणं ।
श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखं ।
आचाराद् विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण तु संयुक्तः सम्पूर्णफलभाग् भवेत् ॥ इत्यादि ।

**End.** द्रव्यहीनः पिबेदापो गायत्र्या चाष्टभुक् द्विजः ।
भुक्त्वा च पार्वणश्राद्धे प्राणायामान् षडाचरेत् ॥
श्रीरामः । इति ।

**Colophon.**

विषयः । संक्षेपेण कृते कालदीपमालदीपाख्ये स्मृतिसंग्रहे यानि याज्ञवल्क्यादुक्तानि कर्तव्य-कर्मोपपादकानि वचनानि इह तु तेषामेव संक्षेपेण वर्णनं ।

---

**No. 124.** दुर्गोत्सवचन्द्रिका । By रामचन्द्र गजपति । Substance, palm leaf, 17 × 1½ inches. Folia, 77. Lines, 4 on a page. Extent, 1540 Ślokas. Character, Uria. Date ? Place of deposit, Dāmodarpur Śāsana, Zilla Puri, Paṇḍit Sadāśiva Kāvyakaṇṭha. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीश्रीदुर्गायै नमः ।
यन्नीहारं चिकुरच्छलेन तपनं सिन्दूरबिन्दूपधेः
पीयूषद्युतिबिम्बमाननमिषाद् ज्योत्स्नां स्मितच्छद्मना ।
प्रालेन्दुं कुचकैतवाद्दिशिकुलं व्याजाद् वचश्रीवरी-
रर्घाशाय मिथ्या विश्वनिधये मूलप्रकृत्यै नमः ॥
सकलागमसारतत्त्ववेत्ता च कलानामिव सर्वतोऽर्थदः ।
तनुते भुवि रामचन्द्रदेवश्चरणाश्रीवरभक्तिमञ्जिकायाः ॥
यश्चोदेति यशोविधुक्षितमलाभानन्दमापाद्यं-
धाराभिः परिपश्चिपाञ्चरमनोमध्येऽमनापाप्तुभिः ।
का चिन्ता भवनाम्बुधौ मग्यतामन्यामरे स्वामिनः
श्रीदाम्भोधिरत्नस्वरूपरीवेषाय मेखाय ते ॥ (?)

कर्णः कर्णपथं न याति न च वै वैरोचनी रोचते
मोघाः कामदुघा बभूवुरनघा नीचोद्यमोचिः स्वयं ।
कल्पः कल्पतरवः परेषुगणना का नाम कामस्पृशां
यस्मिन् दानविधानमानवसुधाधामनवे जायति ॥
वृद्धान्यमनुयुञ्जाने जनोयमनुमंसते ।
अयं मूकायते नूनं वदान्यमिति पृच्छति ॥
श्वेतद्वीपं शिशिरशिखरौ लम्बते पद्मयुग्मं
मध्ये पादौ वहति कनककाधरवसुशोभां ।
ताराहारापतिरपि तनूर्धूतपद्मानुकारी
यस्याः स्वैरं स्फुरति भुवने यस्य सा कीर्त्तिवंशी ॥
भीतेव प्रथमं विरोधिवसुधा यद्वाजिराजीखुर
क्षोभोद्भूतरजश्छलेन रिपुभिः सार्कं द्युलोकं गता ।
श्रुत्वा तव धरानुपालनयशःसर्वारमारीगणै-
र्गीतं निर्भयतामुपागतवती भूयः परावर्त्तते ॥
स निशम्य सम्यगखिलागमोदितं विबुधैर्विचिन्त्य बहुधानुमोदितः ।
शरदुत्सवे गिरिभुवः समर्चनचन्द्रिकां दिशति सम्मतां सतां ॥
मन्त्राः सन्ति क्षितिधरभुवो लक्षशो दक्षिणेऽपि (?)
प्रायो मार्गे अपकृतविधौ ये फलं साधयन्ति ।
चतुर्विंशत्यक्षरमनुरयं किन्तु सच्चिन्तितानां
नानार्थानां क्षमा इति ततः कीर्त्यते तत् प्रयोगः ॥
एषा विद्या सर्व्वभावानवद्या पद्या मुक्तेः सेविता मुक्तिकामैः ।
यद्दु वा दत्ते कामनां मन्त्रमुख्यः सद्योदत्ते तं तमेवास्य कामं ॥
ईशानसंहितादौ यदीरितं कालिकापुराणादौ ।
यद्बोधि यद्यामले सम्मोहनसम्मुखोक्तेषु ॥
यदलम्भि तन्त्रसारसारस्वततन्त्रमन्त्रवरवाक्यैः ।
अन्यासु संहितासु च तन्त्रेष्वथवा पुराणेषु ॥
तत्तत् विषये निबन्धे यदिदं विषये विलोकितं किमपि ।
दुर्गायाः शरदुत्सवविषये तत्तत् निबध्नीमः ॥   इत्यादि ।

End.

यन्नार्थीं मुदितां विचिन्त्य हृदये सचिन्तवेदीचितं ।
श्रोतर्षीमिव तां विमेचविभवैरानीय सम्मानयन्
न्यासारे विनिवेश्य देहितिविधिभूर्यस्य नाम्नामिधिः ।
यावद् व्योमभूयं हसति मधुकराः कार्मुकं मन्मथारे-
र्यावत् तद्वैरिकर्णे स भवतु भगवान् भूषणं पन्नगेशः ।
यावत् तुङ्गस्यमायो विचरति कमलायामुगूढ × × ×
तावच्छ्रीरामचन्द्रक्षितिपतिरचिता निर्मितिः श्रीविद्यानां ।

**Colophon.** इति श्रीरामचन्द्रनृपतिविरचिता दुर्गोत्सवचन्द्रिका सम्पूर्णा । श्रीदुर्गे नम चरणे ।

विषयः । श्रीदुर्गा-जपविधि-होमविधि-तर्पणविधि-चतुर्विधदेवभावनादुर्गासमर्चनविधि काङदेवीविधानादिविवेचनं ।

---

**No. 125.** देवीमाहात्म्यटीका ( सबुद्धिणी ) सुबोधिनीनाम्नी By माधवानन्द चक्रवर्त्ती । Substance, country-made paper, 18×4 inches. Folia, 37. Lines, 8 on a page. Extent, 750 slokas. Character, Bengali. Date, Saka 1712. Place of deposit, Elanga *viâ* Tangail, Babu Nilkamal Bhaṭṭācāryya, Zemindar. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमश्चण्डिकायै ।

प्राक्किल भगवद्बादरायणान्तेवासी जैमिनिर्महाभारतविषयेषु केष्वतीत-पदार्थेषु सन्दिहानो मार्कण्डेयं महर्षिमुपगम्य प्राचचीत × × अथ तेनोक्तं नायमस्माकं कथाक्षण इति सर्वार्थाभिज्ञान् विन्ध्यापकन्दरनिलयां-श्चतुरः पक्षिणः पृच्छेति अमुना उपदिष्टोऽसावपि तथैवाकार्षीत् । पुनर्जैमिनिप्रश्नानुरोधात् सर्व्वादिपुराणाख्यानावसरे तुरीयपुरा-णाख्याख्यायां मार्कण्डेयभागुरिसम्वादात्मकमितिहासमनुवर्णयन्तोऽष्टममन्वन्त-रमुपक्रममाणा धर्म्मपक्षिणः जपुर्मार्कण्डेय उवाचेति इत्यादि ।

**End.** एवमिति । एवं प्रकारेण सुरथः देवात् वरं लब्ध्वा सूर्य्याज्जन्म समासाद्य सावर्णिर्मनुर्भविता अधिपयंभः अधिपमेडः सावर्णिर्भवितामनुरिति पुनराहभिः समाप्तिं द्योतयति सम्प्रदायात् । तथा चाह्लादिति चतुर्भुजेन लिखितमिदमिति । चतुर्भुजाख्येन देवीमाहात्म्ये त्रयोदशाधिकानि

